TRIVANDRUM SANSKRIT SERIES.
No. CXXVIII.
Śrī Citrodayamañjarī.
No. XVII.

# THE BHṚṄGASANDEŚA

OF

Vāsudeva

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1937.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १२८.

श्रीचित्रोदयमञ्जरी ।

ग्रन्थाङ्कः १७.

वासुदेवविरचितः

# भृङ्गसन्देशः

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितः ।

स च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितः ।

कोल्लम्बाब्दाः ११९२. क्रैस्ताब्दाः १९१७.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजानिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# INTRODUCTION.

This work is celebrated by the name Bhṛṅgasandeśa based on its being the message sent, by one lover in separation, from Trivandrum to his beloved Bālanīli, residing in the house of Bālayakṣa in Śvetadurga (Koṭṭakkal in North Malabar) through a Bhṛṅga (beetle). Even though it bears another title Bhramarasandeśa, it can be known from the following line that the name intended by the poet was Bhṛṅgasandeśa :—

"आर्त्तो भृङ्गं कमपि पुरतो वीक्ष्य मन्दं बभाषे" ।

(p. 2, verse 5.)

In the latter part again,

"तेनाश्वस्ता किमपि कुतुकाश्चर्यलज्जानुविद्धा
मुग्धा सम्मार्जयति नयने यावदस्राम्बुपूर्णे ।
तावद् गत्वा सविधमयि कल्याणि! कान्तस्य दूतो
भृङ्गोऽस्मीति भ्रमर! निगदन् मञ्जु सञ्जीवयेथाः ॥"

(p. 27, v. 49.)

the poet addresses him by the word Bhramara, and at the same time reminds him of his being a Bhṛṅga and so the intention of the poet seems worthy of minute consideration. The sending of a message to his beloved Bālanīli by the hero does not seem improbable. For, he was dropped down on the way by the Yakṣi, afraid of her consort, when he was being carried away from Śvetadurga to the peak of the Malaya amidst places, densely covered by trees creepers and arbours, and befitting only the Yakṣās and other heavenly beings.

"मासप्राप्यं मम दिनयुगेनाभिगम्यं तव स्या-
दस्या धौतं गुणगणसुधावीचिभिः श्वेतदुर्गम् ।
स्यानन्दूराद् दृढमतिरतस्त्वं प्रतिष्ठस्व तस्मा-
दस्मानुत्तारयितुमसुतः सङ्कटादुत्तराशाम् ॥"

(p. 4, v. 17.)

The statement in this stanza that Trivandrum is away from Śvetadurga by one month's travel, is true, as there were no proper means of quick travelling in those days as there are at present. But the Bhṛṅga's completion of the journey in two days is due to some divine power.

The poet rightly mentions about this divine power at the beginning itself :—

"ब्रूमः श्रीमन्! मधुप! भवते स्वागतं वैजयन्त्याः
किं त्वं विष्णोरुरसि विकसद्विभ्रमायाः समायाः।
धम्मिल्लाद् वा परिमलसमासक्तमत्तालिपाली-
केलीलोलद्युतरुकलिकासुन्दरादिन्दिरायाः॥"

(p. 2, v. 6.)

"सन्देशोऽस्मिन् कथमपि गुरुश्रीपदाम्भोजयुग्म-
ध्यानोद्धूतप्रबलतमसा वासुदेवेन बद्धे।
पूर्णे दोषैरपि यदि गुणानां कणाः सम्प्रथेर-
न्नेतान् प्रीत्या मनसि परिगृह्णन्तु सन्तो महान्तः॥" (p. 33.)

From the latter verse, found at the close of the work it is clear that the author of this Sandeśa was a poet of the name Vāsudeva. If indeed the poet Vāsudeva, after reaching Trivandrum on pilgrimage, has composed this Kāvya to acquaint his own friends of literary taste with the places he had visited and other particulars concerned, under the guise of a message to his beloved, residing at Śvetadurga, he has in fact surpassed all others by consigning all his personal experiences to the swing of Poesy. Even Kālidāsa, the great poet, resorted to an imaginative theme in his Meghasandeśa, so that it appeals to the readers and that path opened by him has been trodden ever and anon by all the later poets. If the poet's personal experiences are given expression to in this, there is an exceptional excellence in his opening a new course in the field of literature by bringing the familiar places and well-known facts into poetic prominence.

There is not only one poet of the name Vāsudeva. The author of Yudhīṣṭhiravijaya and other works, that of works like Subhadrāharaṇa and that of this Bṛṅgasandeśa are among them. Among these, I think, our poet is the latest and the author of the Yamakakāvya the oldest. In this Sandeśa the names of Śrī Nārāyaṇa Bhaṭṭapāda who is posterior to both the authors of the Yudhīṣṭhiravijaya and Subhadrāharaṇa and his contemporary Śrī Mātṛdattapaṇḍita are mentioned.

"हेरम्बेण प्रथितविभवां मातृदत्ताद्विजेन्द्र-
श्रीमच्छिष्योत्करमुखरितैरास्तृतां शास्त्रघोषैः।
नारायणार्यकविवचःस्यन्दमाधुर्यनन्द-
द्वाणीमन्दस्मितसुरभिलां याहि पाटीरवाटीम्॥

सूक्तिं नारायणकविमुखाम्भोजनिष्यन्दमानां
पीत्वा वापीकमलमधुषु प्राप्तनिर्वेदभारः ।
बिम्बे भानोरपरगिरिशृङ्गेण सञ्चुम्ब्यमाने
लम्बेथास्त्वं भ्रमर! चरणौ वल्लभक्षोणिबन्धोः ॥"

(p. 17, v. 91-92.)

There is another evidence to support this view that the Nārāyaṇakavi mentioned in this work is the great poet and scholar Śrī Nārāyaṇa Bhaṭṭapāda of Melputtūr, the author of Nārāyaṇīya and other works.

"तस्मात् प्रत्यक् प्रहितनयनः कुण्डगेहाधिवासं
सर्वज्ञं तं प्रणम गिरिशं भक्तिमानच्युतं च ।
एकस्तावद् वहति शिरसि ज्योतिषामेकमिन्दुं
ज्योतिश्चक्रं निखिलमपरो धारयत्यन्तरङ्गे ॥"

(p. 17, v. 89.)

The author mentions the great astrologer Achyuta Piṣāroṭi who was the teacher of Śrī Bhaṭṭapāda himself. So it is almost definite that the poet lived in the former half of the 17th century A. D., which is the age of Śrī Nārāyaṇamuni, the disciple of Achyuta. The poet glorifies Śrī Vīra Ravivarma Kulaśekhara, the then king of Trivandrum in the following verse :—

"राज्यं दृष्ट्वाकलय रविवर्मावनीन्द्रस्य सम्पत्-
प्राप्यं वाज्यन्तरितविशिखोद्भ्रमभ्रे समग्रम् ।
चित्रोत्कीर्णै त्रिदशनिवहैः स्थूलनीलोपलौघै-
र्धाम्ना तुल्यं त्रिभुवनपतेर्धाम येन प्रतेने ॥"

(p. 5, v. 24.)

So we can rest assured that his time was the same as that of Śrī Nārāyaṇa Bhaṭṭapāda. The following śloka shows that the work was composed after Śrī Nārāyaṇa Bhaṭṭapāda's regaining his health on his dedication of the Nārāyaṇīya, the hymns of praise abridging the Bhāgavata at the feet of Lord Kṛṣṇa of Guruvāyupura, and the Lord's being known as the Great Physician.

"इत्थं श्रुत्वा भुवनपितरौ तौ समामन्त्र्य तस्मा-
दस्मत्प्राणप्रियसख! समीरालयं शीलयेथाः ।
यस्मिन् देवः स्वयमपि महापावनः पावमाना-
मातङ्कानामुपशमयिता भासते वासुदेवः ॥"

(p. 15, v. 76.)

On reaching the temple of Vaikom,

वाताधूतारुणकिसलयाः पुष्पिता कोकभृङ्गाः
स्तोकोत्कम्पिस्तबकनमितास्तत्र वल्लीमतल्लीः ।
दूरे दृष्ट्वा द्रुतमुपसरन् भृङ्ग ! वेत्तासि ताभ्यो
जातैर्गीतैः स्फुटजनपदैर्लासिका इत्युपान्ते ॥

(p. 11, v. 55.)

the Bhṛṅga thus seared, under the illusion of creepers, finally realises that they were the dancing girls, on hearing the song. It seems that this fact of the custom of dancing by Devadāsis prevalent in those days, was the personal experience of the poet himself. I consider that the course of historical research on the then prevalent social customs pointed out here is not beyond the comprehension of those possessed of the power of investigation. We have done thus much. Herein are appended the names of kings, poets and places glorified in this Sandeśa.

| | | |
|---|---|---|
| Ravi Varma Bhūpa | Verse | 24 |
| Capital of the Kūpaka Princes | " | 25 |
| Koḷambadeśa | " | 27 |
| River Sulalita | " | 28 |
| Vallabhagrāma | " | 29 |
| The South Bimbili | " | 30 |
| Udaya Mārtāṇḍa | " | 30 |
| River Kauṇi | " | 32 |
| Srīkumāragrāma | " | 34 |
| Kumārālaya | " | 36 |
| The King Gōdavarmā | " | 38 |
| The Capital of Devanārāyaṇa | " | 42 |
| The King Ravi Varmā | " | 45 |
| The temple of Vaikom | " | 51 |
| Pūrnatrayī | " | 60 |
| River Chūrṇi | " | 61 |
| The King Rāja Rāja | " | 61 |
| The Capital of Cochin | " | 62 |
| Pañcaraṅganātha | " | 63 |
| The king of Sailasindhu | " | 64 |
| The King of Kurumba | " | 65 |
| Guṇaka | " | 66 |
| Keraleṇdra | " | 68 |
| Saṅgamagrāma | " | 70 |
| River Kulivini | " | 70 |
| Vṛsādri | " | 73 |
| Samīrālaya | " | 76 |

Respectfully acknowledging our deep thankfulness to Brahmaśrī Ravi Vāsudevar Nambūrippād of Aghoramana, from whom we procured the original manuscript, we place the work before the generous public.

Trivandrum,
12-8-1112.

K. SĀMBAŚIVA ŚĀSTRĪ.

On reaching the temple of Vaikom,

वाताधूतारुणकिसलयाः पुष्पिता कोलभृङ्गाः
स्तोकोत्कम्पिस्तबकनमितास्तत्र वल्लीमतल्लीः ।
दूरे दृष्ट्वा द्रुतमुपसरन् भृङ्ग! वेत्तासि ताभ्यो
जातैर्गीतैः स्फुटजनपदैर्लासिका इत्युपान्ते ॥

(p. 11, v. 55.)

the Bhṛṅga thus seated, under the illusion of creepers, finally realises that they were the dancing girls, on hearing the song It seems that this fact of the custom of dancing by Devadāsīs prevalent in those days, was the personal experience of the poet himself. I consider that the course of historical research on the then prevalent social customs pointed out here is not beyond the comprehension of those possessed of the power of investigation. We have done thus much. Herein are appended the names of kings, poets and places glorified in this Sandeśa.

| | | |
|---|---|---|
| Ravi Varma Bhūpa | Verse | 24 |
| Capital of the Kūpaka Princes | ,, | 25 |
| Koḷambadeśa | ,, | 27 |
| River Sulalita | ,, | 28 |
| Vallabhagrāma | ,, | 29 |
| The South Bimbili | ,, | 30 |
| Udaya Mārtāṇḍa | ,, | 30 |
| River Kauṇi | ,, | 32 |
| Srīkumāragrāma | ,, | 34 |
| Kumārālaya | ,, | 36 |
| The King Gōdavarmā | ,, | 38 |
| The Capital of Devanārāyaṇa | ,, | 42 |
| The King Ravi Varmā | ,, | 45 |
| The temple of Vaikom | ,, | 51 |
| Pūrnatrayī | ,, | 60 |
| River Chūrṇi | ,, | 61 |
| The King Rāja Rāja | ,, | 61 |
| The Capital of Cochin | ,, | 62 |
| Pañcaraṅganātha | ,, | 63 |
| The king of Sailasindhu | ,, | 64 |
| The King of Kurumba | ,, | 65 |
| Guṇaka | ,, | 66 |
| Keralendra | ,, | 68 |
| Saṅgamagrāma | ,, | 70 |
| River Kulivini | ,, | 70 |
| Vṛsādri | ,, | 73 |
| Samīrālaya | ,, | 76 |

Respectfully acknowledging our deep thankfulness to **Brahmaśrī** Ravi Vāsudevar Nambūrippād of Aghoramana, from whom we procured the original manuscript, we place the work before the generous public.

Trivandrum,
12-8-1112.

K. SĀMBAŚIVA ŚĀSTRĪ.

॥ श्रीः ॥

# निवेदना ।

काव्यमिदं श्रीमदनन्तशयनाद् (Trivandrum) विरहिणा केनापि श्वेतदुर्गे (Kottakkal) बालयक्षाभिधाने भवने बालनीलीसंज्ञायै प्रेयस्यै भृङ्गमुखेन प्रेष्यमाणं सन्देशमास्पदीकृत्य भृङ्गसन्देशः प्रथते । सत्यपि भ्रमरसन्देश इति नामान्तरे

"आर्तो भृङ्गं कमपि पुरतो वीक्ष्य मन्दं बभाषे ।"

पा० २. श्लो० ५.)

इति दर्शनात् कविकल्पितं नामधेयं भृङ्गसन्देश इत्येव लगति । उत्तरभागे —

"तेनाश्वस्ता किमपि कुतुकाश्चर्यलज्जानुविद्धा
मुग्धा सम्मार्जयति नयने यावदस्राम्बुपूर्णे ।
तावद् गत्वा सविधमयि कल्याणि ! कान्तस्य दूतो
भृङ्गोऽस्मीति भ्रमर ! निगदन् मञ्जु सञ्जीवयेथाः ॥"

(पा० २७. श्लो० ४९.)

इति पद्यदिशा भ्रमरं सम्बोधयतो भृङ्गाहन्तामुपदिशतः कवेराकूतं तु सूक्ष्मविचारमृग्यं दृश्यते । पुरा खलु वनगुल्मलतासान्द्रेषु देशेषु यक्ष्यादिद्युचरीसञ्चारसमुचितेषु कयापि यक्ष्या श्वेतदुर्गान्मलयशिखरं निनीषितेऽपि, मार्गे निजपतिभीतया परित्यक्ते च नायके तस्य स्वप्रेयसीं बालनीलीं प्रति क्रियमाणोऽयं सन्देशो नावस्तुसम्भवी ।

"मासप्राप्यं मम दिनयुगेनाभिगम्यं तव स्या-
दस्या धौतं गुणगणसुधावीचिभिः श्वेतदुर्गम् ।
स्यानन्दूराद् दृढमतिरतस्त्वं प्रतिष्ठस्व तस्मा-
दस्मानुचारयितुमसुतः सङ्कटादुत्तराशाम् ॥"

(पा० ४. श्लो० १७.)

इति पद्यभागेन तथ्यमिदमुच्यते, यदनन्तशयनाद् बाढं श्वेतदुर्गं मासप्राप्यम्, अधुनेव शीघ्रतरगमनं साधयितुं तत्तादृशवाहनविरहात् । किन्तु भृङ्गस्य दिनयुगगन्तव्यता दिव्यत्वमात्रसाध्या । तच्चेदं दिव्यत्वमादावेव कविरेवमासूत्रयन् मन्ये नासाधुवादी । तथाहि —

"ब्रूमः श्रीमन्! मधुप! भवते स्वागतं वैबयन्त्याः
किं त्वं विष्णोरुरसि विकसद्विभ्रमायाः समायाः।
धम्मिल्लाद् वा परिमलसमासक्तमत्तालिपाली-
केलीलोलद्युतरुकलिकासुन्दरादिन्दिरायाः॥"
(पा० २. श्लो० ६.)

इति।

"सन्देशेऽस्मिन् कथमपि गुरुश्रीपदाम्भोजयुग्म-
ध्यानोद्धूतप्रबलतमसा वासुदेवेन बद्धे।
पूर्णे दोषैरपि यदि गुणानां कणाः सम्प्रथेर-
न्नेतान् प्रीत्या मनसि परिगृह्णन्तु सन्तो महान्तः॥"
(पा० ९३)

इति दृश्यमानात् परिसमाप्तिपद्यादस्य सन्देशस्य कर्ता कश्चिद् वासुदेवनामा कविरिति ज्ञायते। यदि पुनरयमेव वासुदेवस्तीर्थाटनकामनया सञ्चरन्ननन्तशयन आगत्य श्वेतदुर्गवासिन्यै स्वदयितायै सन्देशप्रेषणमिषेण परिचितान् देशानन्यान्यांश्च विशेषान् स्वसुहृदः सहृदः परिचाययन्निदं काव्यं न्यभान्स्यदहोनुखलु!! सुतरामनेनाजेष्यतास्मानुभवसमर्पणेन साहितीसमान्दोलिकायामिति निश्चप्रचम्। महाकविरपि कालिदासः कल्पितमेवेतिवृत्तमवलम्ब्य रसयत्यस्मान् मेघेनेति स एष सामान्यतः समुद्घाटितः पन्थाः प्रहतचर इत्यास्ताम्। इह तु परिचितानेव देशान् परिचितैरेव कार्यैः पुरस्कुर्वतोऽस्य साहितीसरण्या प्रवेशनं परं स्यात् कश्चिद् विशेषः, यदि स्वानुभव एव समुत्कीर्णः। सन्ति च नैके वासुदेवसंज्ञाः कवयः। युधिष्ठिरविजयादेः सुभद्राहरणादेरस्य भृङ्गसन्देशकाव्यस्य च प्रणेतारः। तेषु मन्येऽर्वाचीनः प्रकृतो वासुदेवः, प्राचीनश्च यमककविः। यदयं युधिष्ठिरविजयादिसुभद्राहरणादिकर्तृवासुदेवाभ्यामर्वाचीनान् श्रीनारायणभट्टपादांस्तत्समयजीविनः श्रीमातृदत्तपण्डितांश्चेह सन्देशे स्मरति। यथा—

"हेरम्बेण प्रथितविभवां मातृदत्तद्विजेन्द्र-
श्रीमच्छिष्योत्करमुखरितैरास्तृतां शास्त्रघोषैः।
आरान्नारायणकविवचःस्यन्दमाधुर्यनन्द-
द्वाणीमन्दस्मितसुरभिलां याहि पाटीरवाटीम्॥

[illegible]
[illegible]
[illegible]
[illegible] ॥"

([illegible] श्लो० ९१, ९२.)

इति ।

[illegible] महाकविर्महापण्डितश्चो-परिनवग्रामवासी श्रीमन्नारायणभट्टपादान् [illegible] । यदस्य गुरु-र्दर्शमच्युतपिशारोटिं [illegible] —

"तस्मात् मत्स्य प्रभृति [illegible]
[illegible] निरीक्षे [illegible] च ।
[illegible] [illegible]
ज्योतिश्चक्रे [illegible] ॥"

(पा० १७. श्लो० ८९.)

इति पद्ये परामृशति । अतः [illegible] जीवितसमयोऽपि कैस्तवीयाब्दानां सप्त-दशशतकपूर्वार्धं, [illegible] । तथा [illegible]ऽस्मद-नन्तशयनमहाराजान् श्री[illegible] —

"राज्यं हृष्टयाकलय्य रविवर्मावनीन्द्रस्य सम्यक्-
प्राज्यं वाज्यन्तरितविशिखोद्यमग्रे समग्रम् ।
चित्रोत्कीर्णं त्रिदशनिवहैः स्थूलनीलोपलैर्वै-
र्धाम्ना तुल्यं त्रिभुवनपतेर्धाम येन प्रतेने ॥"

(पा० ५. श्लो० २४.)

इति पद्येनानुस्मरन्नयं बाढमात्मनो जीवितसमयं श्रीमन्नारायणभट्टपादीयमनु-मन्यते । कृतिश्चेयं श्रीमन्नारायणभट्टपादैः श्रीगुरुवायुपुरनाथसन्निधौ नाराय-णीयं स्तोत्रप्रबन्धं भागवतार्थसङ्ग्रहात्मकं विरचय्योपसमर्प्य कल्यतासम्पादनेन भगवत आतङ्कोपशामकत्वेन प्रसिद्धिघोषणानन्तरसम्भवेत्यवस्तनः श्लोको गम-यति । यथा —

"इत्थं नुत्वा भुवनपितरौ तौ समामन्त्र्य तस्मा-
दस्मत्प्राणप्रियसख ! समीरालयं शीलयेथाः ।

"ब्रूमः श्रीमन्! मधुप! भवते स्वागतं वैजयन्त्याः
किं त्वं विष्णोरुरसि विकसद्विभ्रमायाः समायाः।
धम्मिल्लाद् वा परिमलसमासक्तमत्तालिपाली-
केलीलोलच्युतरुकलिकासुन्दरादिन्दिरायाः॥"

(पा० २. श्लो० ६.)

इति।

"सन्देशेऽस्मिन् कथमपि गुरुश्रीपदाम्भोजयुग्म-
ध्यानोद्धूतप्रबलतमसा वासुदेवेन बद्धे।
पूर्णे दोषैरपि यदि गुणानां कणाः सम्प्रथेर-
न्नेतान् प्रीत्या मनसि परिगृह्णन्तु सन्तो महान्तः॥"

(पा० ३३)

इति दृश्यमानात् परिसमाप्तिपद्यादस्य सन्देशस्य कर्ता कश्चिद् वासुदेवनामा कविरिति ज्ञायते। यदि पुनरयमेव वासुदेवस्तीर्थाटनकामनया सञ्चरन्ननन्तशयन आगत्य श्वेतदुर्गवासिन्यै स्वदयितायै सन्देशप्रेषणमिषेण परिचितान् देशानन्यान्यांश्च विशेषान् स्वसुहृदः सहृदः परिचाययन्निदं काव्यं न्यभान्स्यदहोनुखलु!! सुतरामनेनाजेष्यतात्मानुभवसमर्पणेन साहितीसमान्दोलिकायामिति निश्चप्रचम्। महाकविरपि कालिदासः कल्पितमेवेतिवृत्तमवलम्ब्य रसयत्यस्मान् मेघेनेति स एष सामान्यतः समुद्घाटितः पन्थाः प्रहतचर इत्यास्ताम्। इह तु परिचितानेव देशान् परिचितैरेव कार्यैः पुरस्कुर्वतोऽस्य साहितीसरण्या प्रवेशनं परं स्यात् कश्चिद् विशेषः, यदि स्वानुभव एव समुत्कीर्णः। सन्ति च नैके वासुदेवसंज्ञाः कवयः। युधिष्ठिरविजयादेः सुभद्राहरणादेरस्य भृङ्गसन्देशकाव्यस्य च प्रणेतारः। तेषु मन्येऽर्वाचीनः प्रकृतो वासुदेवः, प्राचीनश्च यमककविः। यदयं युधिष्ठिरविजयादिसुभद्राहरणादिकर्तृवासुदेवाभ्यामर्वाचीनान् श्रीनारायणभट्टपादांस्तत्समयजीविनः श्रीमातृदत्तपण्डितांश्चेह सन्देशे स्मरति। यथा—

"हेरम्बेण प्रथितविभवां मातृदत्तद्विजेन्द्र-
श्रीमच्छिष्योत्करमुखरितैरास्तृतां शास्त्रघोषैः।
आरान्नारायणकविवचःस्यन्दमाधुर्यनन्द-
द्वाणीमन्दस्मितसुरभिलां याहि पाटीरवाटीम्॥

सूक्तिं नारायणकविकुलाम्भोधिकल्लोलमालां
पीत्वा [illegible] माधुलिर्वैसुधारां ।
स्निग्धे [illegible] सम्पुल्लसन्ताने
[illegible] भव! हर्षात् [illegible] ॥"

(पा० १७. श्लो० ९१, ९२.)

इति ।

श्रीमद्भारत[illegible] महाकविर्महापण्डितश्चोपरिनवग्रामवासी श्रीमन्नारायणभट्टपाद इत्येतत् [illegible] । यदस्य गुरुवर्यमच्युतपिषारोटिं ज्योतिर्विदं [illegible] मन्त्रकार: —

"तस्मात् भत्यकु प्रहितमनसः कुण्डलेशाधिवासं
सर्वेऽहं तं भजन गिरिशं भक्तिमानच्युतं च ।
एकस्तावद् वहति शिरसि ज्योतिषानेकमिन्दुं
ज्योतिश्चक्रं निखिलमपरो धारयत्यन्तरङ्गे ॥"

(पा० १७. श्लो० ८९.)

इति पद्ये परामृशति । अतः सिद्धमस्य जीवितसमयोऽपि कैस्तवीयाब्दानां सप्तदशशतकपूर्वार्धे, यन्नारायणभट्टपादगुरोरच्युताचार्यस्य । तदात्वविजयिनोऽस्मदनन्तशयनमहाराजान् श्रीवीररविवर्मकुलशेखरान् —

"राज्यं दृष्ट्वाकलय रविवर्मावनीन्द्रस्य सम्पत्-
प्राज्यं वाज्यन्तरितविशिखोद्भ्रममग्रे समग्रम् ।
चित्रोत्कीर्णं त्रिदशनिवहैः स्थूलनीलोपलौघै-
र्धाम्ना तुल्यं त्रिभुवनपतेर्धाम येन प्रतेने ॥"

(पा० ५. श्लो० २४.)

इति पद्येनानुस्मरन्नयं बाढमात्मनो जीवितसमयं श्रीमन्नारायणभट्टपादीयमनुमन्यते । कृतिश्चेयं श्रीमन्नारायणभट्टपादैः श्रीगुरुवायुपुरनाथसन्निधौ नारायणीयं स्तोत्रप्रबन्धं भागवतार्थसङ्ग्रहात्मकं विरचय्योपसमर्प्य कल्यतासम्पादनेन भगवत आतङ्कोपशामकत्वेन प्रसिद्धिघोषणानन्तरसम्भवेत्यवस्तनः श्लोको गमयति । यथा —

"इत्थं नुत्वा भुवनपितरौ तौ समामन्त्र्य तस्मा-
दस्मत्प्राणप्रियसख! समीरालयं शीलयेथाः ।

अस्य च समग्रगुणसम्पन्नस्य सन्देशस्य प्रसिद्धीकरणे समुपलब्धो-स्माकमादर्शो ब्रह्मश्री-अघोरमनक्कल् अधिपति-रविवासुदेवर् नम्पूरिप्पाड्-ाभिधानादिति सबहुमानमेतेषु कृतज्ञतामनुस्मरन्नास्मि तमिमं महाजनसमक्ष-ावतारयिता ।

अनन्तशयनम्,
१२-८-१९१२.

के. साम्बशिवशास्त्री.

॥ श्रीः ॥

# भृङ्गसन्देशः

वासुदेवविरचितः ।

---

हर्म्ये रम्ये बहलविगलच्चन्द्रिकायां निशायां
मन्दं नन्दत्कुमुदसुरभौ शीतले वाति वाते ।
लीलापाङ्ग्या मनसिजकलाखेलनायासिताङ्ग्या
साकं निद्रां सुकृतिसुलभां कोऽपि कामी सिषेवे ॥ १ ॥

तं निद्राणं मदनविवशा काचिदालक्ष्य यक्षी
हस्ते धृत्वा मलयशिखरे हन्त रन्तुं प्रयान्ती ।
स्यानन्दूरे निजपतिमुपायान्तमालोक्य भीता
विन्यस्यैनं क्वचन विमनास्तेन सार्धं प्रयाता ॥ २ ॥

पुष्पारामे किल मधुरिपोः सम्भ्रमेण प्रबुद्धः
सद्यः सोऽयं प्रियजनमनालक्षयन् कण्ठलग्नम् ।
कष्टं दिष्टं किमिदमदयं दृष्टमित्याकुलात्मा
तत्र क्षेत्रे कतिचन दिनान्येष मोहेन निन्ये ॥ ३ ॥

मा मा सीद प्रियजनवियोगामयात् कामयाना
यक्षी सौधादपहृतवती प्रस्वपन्तं भवन्तम् ।
कान्ता श्रान्तापि च तव सखे! नापदं प्रापदन्यां
तद् गन्तव्यं द्रुतमिति दिवः शुश्रुवे तेन वाणी ॥ ४ ॥

G. P. T. 16 1-10-1111.

आकर्ण्यासौ गिरममृतनिःष्यन्दिनीमाधिमन्दो-
ऽप्यन्तर्धैर्याङ्कुरमभिवहन् गन्तुमुद्युक्तचेताः ।
प्राप्तां मूर्च्छाद्विरहिमिथुना माधवीं वीक्ष्य लक्ष्मी-
मार्त्तो भृङ्गं कमपि पुरतो वीक्ष्य मन्दं बभाषे ॥ ५ ॥

ब्रूमः श्रीमन्! मधुप! भवते स्वागतं वैजयन्त्याः
किं त्वं विष्णोरुरसि विकसद्विभ्रमायाः समायाः ।
धम्मिल्लाद्वा परिमलसमासक्तसत्त्वालिपाली-
केलीलोलच्युतरुकलिकासुन्दरादिन्दिरायाः ॥ ६ ॥

अभ्याशे मे तिलकय सखे! कोरकस्तोकनम्रा
सेयं बाला कुरवकलतात्युत्सुका त्वत्सकाशे ।
एता वाताकुलकिसलयश्रेणिभिर्मन्दमन्दं
वीजन्तीव प्रतिनवमधुप्रस्नविन्यो लतास्त्वाम् ॥ ७ ॥

चक्षुर्ग्राह्यं सुचरितफलं वल्लभा कच्चिदेषा
विश्रामं ते पथि वितनुते मञ्जुना गुञ्जितेन ।
या सन्तप्ता दिनकृति ललाटन्तपे सम्प्रविष्टा
पक्षच्छायां तव तदधिकं तप्यते चिन्तयन्ती ॥ ८ ॥

दुर्जातेऽस्मिन् मम करुणया धातुराप्तोऽसि बन्धु-
र्दिष्ट्या घोरे तमसि पतितस्येव माणिक्यदीपः ।
अभ्यस्तो यश्चिरतरमशोकेषु ते पक्षपातो
भूयानद्य प्रसरतु सशोकेऽपि सोऽयं जनेऽस्मिन् ॥ ९ ॥

कारुण्याब्धे! शृणु मम दशां यौ पुरा विप्रलम्भं
श्रुत्वा काव्येष्वपि सममुभौ सौम्य! मोहं प्रपन्नौ ।

आवामेवं प्रणयविवशौ दारुणे विप्रयोगे
क्लेशाम्भोधौ विधिरपदयं क्षिप्तवानित्यवेहि ॥ १० ॥

वक्षोमग्नोन्नतकुचभरे कन्दलन्मन्दहासे
गाढाश्लेषे मिलति पुलकेभ्योऽपि यद् द्रुह्यति स्म ।
स्त्रीपुंसं तद् विघटितमिथस्सन्निधानं दधाति
प्राणान् दग्धानिह बहुमुखी कारणं सङ्गमाशा ॥ ११ ॥

लोके जन्तोर्भवति भवितव्यं न चान्यत् प्रयत्नै-
र्दैवाधीनं सकलमिति जानामि नानाविचारैः ।
अप्येवं मे दलति हृदयं दीर्यते धैर्यबन्धः
सीदन्त्यङ्गान्यलिवर! तया हन्त जाते वियोगे ॥ १२ ॥

आकर्ण्यन्ते दिशि दिशि हसच्चूतवल्लीमधूली-
माद्यत्पुंस्कोकिलविगलिताः पञ्चमाः स्निग्धदीर्घाः ।
मन्ये शस्त्रव्रणितहृदयस्येव काकोलसेक-
स्तापोद्रेकं मम बहलयन् प्रादुरासीद् वसन्तः ॥ १३ ॥

खेदानुक्त्वा खलु बहुतरान् विप्रयोगार्ति(सि)न्धा-
वस्मिन् मैत्री भवतु भवता सौम्य! नौ पोतपात्री ।
तद् विश्रम्य क्षणमिह लतामण्डपे सावरोधः
स्निग्धं पीत्वा मधु निलयनं मत्प्रियायाः प्रयायाः ॥ १४ ॥

अस्मत्प्राप्तिं (भु? भव)दनुपदं प्रस्तुवन् प्राणनाथां
गत्वा तप्ताममृतजलधौ सौम्य! निर्मज्जयेथाः ।
विश्लेषार्त्या विधुरमनसां वल्लभानामुदन्तः
प्राणान् क्षीणापरिमृदुगिरां कण्ठनालेऽपि रुन्धे ॥ १५ ॥

लोके ये केचन विदधते पीडितेष्वार्द्रभावं
जन्तुष्वन्तर्न खलु सकला रक्षितुं ते समर्थाः ।
रक्षादक्षा अपि न समये सम्पतन्त्यातुराणां
शिष्टं किञ्चिन्मम सुचरितं सौम्य ! दृष्टोऽधुना त्वम् ॥ १६ ॥

मासप्राप्यं मम दिनयुगेनाभिगम्यं तव स्या-
दस्या धौतं गुणगणसुधावीचिभिः श्वेतदुर्गम् ।
स्यानन्दूराद् दृढमतिरतस्त्वं प्रतिष्ठस्व तस्मा-
दस्मानुत्तारयितुममुतः सङ्कटादुत्तराशाम् ॥ १७ ॥

सम्प्राप्तव्यं तव पुरमितः श्वेतदुर्गं यदुक्तं
तस्यैवालोकनमपि फलं कल्पय त्वत्प्रयाणे ।
यस्मिन् नित्यं हिमगिरिसुताचञ्चलापाङ्गलक्ष्मी-
लक्ष्मीभूतं किमपि करुणाशीतलं ज्योतिरास्ते ॥ १८ ॥

इन्द्रप्रस्थं पुरमिव पुरा कौरवस्य प्रविष्ट-
स्यान्तर्भ्रान्तिस्तव नयनयोः स्याज्जलेषु स्थलेषु ।
वक्त्रैः स्त्रीणां मरतकतले बिम्बितैर्वापिकाम्भ-
श्शुम्भद्भिस्तैरपि च विमलैश्चन्द्रशालाकदम्बैः ॥ १९ ॥

नोद्यानेषु त्रिदशलतिकाः स्थावरास्तावदस्मिन्
पेयं नाब्धेरुदितममृतं नात्र नेता वलारिः ।
तस्मादस्मत्प्रियसहचरीनूत्नदिव्याङ्गनायाः
सृष्टौ धात्रा विरचितमिदं नूतनं नाकमाहुः ॥ २० ॥

वार्तामार्तां प्रति कथयितुं प्रेयसीं मे प्रवृत्तो
मार्गं तावच्छृणु शुभमितस्तन्निकेतावसानम् ।

नीत्वा नीत्वा श्रममनुवनं येन गन्तासि भूयः
पीत्वा पीत्वा मधु सममलिन्या नळिन्यां नळिन्याम् ॥ २१॥

नत्वा देवं नलिननयनं नागभोगे शयानं
कृत्वा सर्वं भव(त? तु) सफलं कृत्यमित्यन्तरङ्गे ।
कुर्युः प्रत्युद्गमसुखमितः प्रस्थितस्योत्तराशां
चञ्चौ चञ्चत्कपिशकलमामञ्जरीकाः शुकास्ते ॥ २२ ॥

दत्त्वा शुम्भत्कनककलशे पद्मनाभालयाग्रे
दृष्टां दृष्टिं सह दयितया सम्पतन्नम्बरान्ते ।
श्यामाश्चञ्चत्किसलयदुकूलाञ्चलाश्चञ्चलीक-
स्तोमापाङ्गा मधुप! लतिका मन्दमामन्त्रयेथाः ॥ २३ ॥

राज्यं दृष्ट्वाकलय रविवर्मावनीन्द्रस्य सम्प-
त्प्राज्यं वाज्यन्तरितविशिखोदग्रमग्रे समग्रम् ।
चित्रोत्कीर्णं त्रिदशनिवहैः स्थूलनीलोपलौघै-
र्धाम्ना तुल्यं त्रिभुवनपतेर्धाम येन प्रतेने ॥ २४ ॥

पारेपाथोनिधि कुलपुरी कूपकक्ष्मापतीनां
लक्ष्या लक्ष्मीविहरणकलासम्पदो हेमलक्ष्या ।
फेनक्षौमाम्बरनिचुलितान् यन्निषद्यासु हृद्यान्
वीचीहस्तैर्विकिरति मणीन् नित्यमम्भोधिरेव ॥ २५ ॥

प्रासादेषु प्रियसहचरीहासमाशङ्क्य हेम-
द्वारं यान्त्यः सपदि वलभौ केशसंस्कारयुक्त्या ।
प्रातर्गात्रं नवनखपदं गूहितुं बालसूर्य-
च्छायारक्तांशुकवलयितास्तत्र दृश्याः सुकेश्यः ॥ २६ ॥

लम्बेथास्त्वं दिवि किमाप लोलम्ब ! कोलम्बदेशे
रम्ये यस्मिन् विलसति सरो मानसं मानवानाम् ।
नित्यं तद्वै नवरविकरोल्लासिनीं राजहंसै-
र्जुष्टां पट्टाम्बरकनकपङ्केरुहालीं प्रसूते ॥ २७ ॥

स्थास्यत्यग्रे तव सुललिता निम्नगा दृष्टिपातं
मुग्धं लब्धुं पुर इव पुरा माधवस्य त्रिवक्रा ।
आदायास्या बहुपरिमलं प्राभृतं निर्मलाया
जातामोदः प्रियमिव जनं सौम्य ! सम्भावयेथाः ॥ २८ ॥

कञ्चिद्भागं पुरजनपदाकीर्णमुत्क्रम्य भूमे-
रञ्चत्केरक्रमुकशिशिरं वल्लभग्राममेत्य ।
लक्ष्मीवक्त्राम्बुजतरुणलोलम्ब ! नित्यं नमस्ते
गोविन्देति प्रणम चरणाम्भोजमूले मुरारेः ॥ २९ ॥

घोराकारं विपिनमतिलङ्घ्याथ तस्यास्तटिन्या
स्तीरारामे शिशिरसुभगे सौम्य ! विश्रम्य यायाः ।
पात्रीभूता पुनरुदयमार्ताण्डकीर्तिच्छटानां
धात्री नेत्रे सुखयितुमलं दक्षिणा बिम्बली ते ॥ ३० ॥

वन्देथास्त्वं भ्रमर ! पुरतः कञ्चिदाश्चर्यबालं
घोषाद् घोषामन इव मुहुर्गोरसं चोरयन्तम् ।
अस्य ब्रूमः कथमिव पयोलुब्धतां यो विशुद्धां
मुक्तिं दत्त्वा विषकटु पयः पीतवान् पूतनायाः ॥ ३१ ॥

प्रादुःष्यात् ते दृशि कुलपुरी बिम्बलीभूपतीनां
कौपीनच्यास्तटपरिसरे दक्षिणे वीक्षणीया ।

या पौरस्त्रीवदनसविधे लज्जमानस्य दौस्थ्यं
दृष्ट्या मार्ष्टि ध्वजपटभुजैर्मण्डलं(?) शीतभानोः ॥ ३२ ॥

शीतालुत्वाद् विवृतवदनैरातपे नक्रचक्रै-
स्तीरं घोरं परिहर पुरस्तत्र गौणीतटिन्याः ।
आत्मा रक्ष्यः सकलजगतामापदो दुर्बलाना-
मेतद् द्वारेष्वनभिसरणी नीतिरित्याहुरार्याः ॥ ३३ ॥

ग्रामं पुण्यं द्विजवरगृहप्रोच्चलद्धोमधूम-
श्यामं पश्य प्रियसख! पुनः श्रीकुमाराभिधानम् ।
जातं यत्र क्षितिसुरगणं बालमेवातिहृद्यं
विद्यास्तन्यं सपदि ददती वर्धयत्यद्रिकन्या ॥ ३४ ॥

गम्भीरार्थस्तबकसुभगे सूक्तिदामन्यनास्था
मा भूदेषां भ्रमर! भवतो मद्विधेयत्वराभिः ।
सत्त्वोद्रेकस्फुरितपरमानन्दसंविद्विशेषं
दुग्धे चित्ते रसमधुझरो यस्य सामाजिकानाम् ॥ ३५ ॥

नत्वा गीतैरुपचर कुमारालयं भूषयन्तीं
गौरीं दूरीकृतसुररिपुव्रातदुर्वारगर्वाम् ।
पृथ्वीयातामिव गिरिशकण्ठप्रभामेघलुब्धां
विद्युल्लेखां कचभरमिषादम्बुदैश्चुम्ब्यमानाम् ॥ ३६ ॥

द्रष्टुं ते तां सकृदपि जगन्मातरुत्कण्ठते न-
श्चित्तं लक्ष्मीं परिणयविधौ पूर्वमद्रीन्द्रगेहे ।
सम्मर्दे सत्यमरसदसश्चन्द्रचूडं वरीतुं
मन्दं यान्त्या भयविनयमन्दाक्षरागाकुलाक्ष्याः ॥ ३७ ॥

इत्थं नत्वा गिरिवरसुतां गोदवर्मक्षितीन्दो-
रग्रे सम्भावय पुरवरं प्रस्फुरद्धेमसालम्।
यद् युद्धे(षु) त्रुटितविमतस्तोमकण्ठान्त्रदाम-
प्रच्छन्नाशेष्वसिलतिकया दिद्युते विद्युतेव॥ ३८॥

तत्रारामं व्रज कनकमञ्जीरकैर्मञ्जुवाचां
गच्छन्तीनां मधुरमुखरैस्तारमाहूयमानः।
वापीयातो दरदलितनालीकपालीमधूली-
मापीयातो मधुकर! मृणालान्तराले शयीथाः॥ ३९॥

कृत्वा तस्यां प्रियसहचरीमेकपक्षान्तराले
तन्वन्नन्यं व्यजनमभिनन्दन् मुदा मन्दवातम्।
स्वादुंकारं मधु दयितया दीयमानं मुखेन
स्वादं स्वादं शमयतु भवानध्वखेदं नलिन्याम्॥ ४०॥

यावद् ग्लानिं विसृजति मनोवल्लभा यावदेव
ग्लानिं भानोर्दधाति किरणास्तावदेव क्षमेथाः।
अस्मत्कान्ताव्यसनचकितः सान्त्वयन्नेव भृङ्गीं
मुक्त्वा पद्माकरमथ ततो याहि कारुण्यसिन्धो!॥ ४१॥

अक्ष्णोर्मार्गे निपतति पुरा राजधानी तदानीं
दुर्गाश्लेषादविदितभया देवनारायणस्य।
यो मेदिन्यामपि निजकमर्थापयन् नामधेयं
कीर्त्तिक्षीरार्णवजलमपारं विधायाधिशेते॥ ४२॥

मत्प्रेयस्या मुखविरचने हस्तलेखाय सृष्टा-
नस्यां धाता पु(र ? रि) निहितवानिन्दुबिम्बाननेकान्।

अस्य स्त्रीणामिह वदनतां प्राप्य सौधाधिरोहा-
दन्यं मन्ये हिमकरमधः कुर्वते गर्विंतास्ते ॥ ४३ ॥

तस्मादन्तर्बकुलपटलीरुद्धघर्मप्रवेशै-
र्देशैरञ्चन्नवकमलिनीकञ्चुकैः सञ्चरेथाः ।
कुञ्जे कुञ्जे शबरसुदृशां मन्मथोन्मादितानां
शृण्वन् कुण्ठक्वणितमभिगम्योपगूढो रमण्या ॥ ४४ ॥

दृष्ट्वा नन्दिष्यसि फलभरैरानतां नालिकेर-
श्रेणीं देशावनिषु रविवर्मप्रतापोज्ज्वलासु ।
यां पान्थेभ्यः शिशिरमधुरं वारि दृष्ट्वा ददानां
को(पा)दुन्मूलयितुमुदधिर्वीचिहस्तैर्धुनोति ॥ ४५ ॥

भक्त्या लभ्यः सकलजगतां मुक्तिमार्गप्रदीपः
सच्चिद्ब्रह्मामृतजलनिधेरुत्तरन्नुत्तरङ्गात् ।
अग्रे सेव्यस्तव हरिमणिः कोऽपि कारुण्यशुम्भ-
ल्लक्ष्मीवक्षोरुहकनककुम्भान्तरालैकबन्धुः ॥ ४६ ॥

रत्नादर्शश्रियमुपहरत्यर्कबिम्बे प्रतीची-
वध्वामे + + वमिव किरत्युज्ज्वलं दिङ्मुखेषु ।
द्रक्ष्यस्यग्रे सकुतुकमनिर्वाणरामास्त्रवह्नि-
ज्वालाजालामिव जलनिधौ पिङ्गलां वीचिमालाम्
[॥ ४७ ॥

पूगाटव्या विततकनकस्तम्भयेवातपश्री-
लेपादापाटलितकलिकाजालया नीलयापि ।
गच्छन्नुच्छृङ्खलशुकघटापक्षविक्षोभितानां
जिघ्रन्नङ्गीकुरु परिमलं तच्छिखामञ्जरीणाम् ॥ ४८ ॥

चक्रे पूर्वं विहरणमसौ पुष्पवत्या नलिन्या
वारुण्याशा पुनरमुमधो वर्तयामास भानुम् ।
क्रान्त्वा वेलामिह पतित एवेति खिन्नेव मन्ये
सन्ध्या मङ्क्ष्यत्यळिवर ! तदैवाम्बरादम्बुराशौ ॥ ४९ ॥

तापं भूमेस्तरणिजनितं मङ्क्षु संक्षिप्य कोक-
द्वय्याश्चित्ते किरति पवने निर्दयं दाक्षिणात्ये ।
रक्षात्मानं कमलमुकुलाकारकारानिबन्धा-
न्न स्वापायानपि मधुरसादाकुलो वेद लोकः ॥ ५० ॥

व्याघ्रक्षेत्रं भज पशुपतेर्नृत्तरङ्गं दिनान्ते
यस्मै नित्यं रजतगिरिरध्य(भ्य)सूयत्यदभ्रम् ।
प्रादक्षिण्याच्चलति भसितालिप्तगात्रे जनौघे
यस्मिन्नन्यः स्फटिकरचितो जङ्गमो भाति सालः ॥ ५१ ॥

भक्तेष्वत्यादरमखिललोकार्तिहारित्वमन्तः
स्निग्धे लोकेऽपि च विवशतां मानमत्तेषु रौक्ष्यम् ।
मूर्ध्ना कण्ठेन च घनरुचा वामभागेन चाक्ष्णा
व्याचक्षाणं प्रणम जगदानन्दनं चन्द्रमौलिम् ॥ ५२ ॥

तस्मिन् सन्ध्याबलिविधिरशेषाघनोदी भविष्य-
त्यदभ्रोरग्रे पटुपटहनिर्ध्वाननिर्धूतलोकः ।
आहरस्यन्ते सुमधुरगिरो गायका यत्र नित्यं
झंकुर्वद्भिः कनकवलयैश्चामरग्राहिणीनाम् ॥ ५३ ॥

शम्भोर्बिम्बाधरनिपतितां त्वत्प्रभामञ्जनाभां
दृष्ट्वा रुष्टा यदि गिरिसुता तत्र मा कातरो भूः ।

आलोक्याकस्मिकरुषमिमां सस्मिते तु स्मरारौ
दन्तज्योत्स्ना सपदि विमृजेदत्र(?) शङ्कानिदानम् ॥ ५४ ॥
वाताधूतारुणकिसलयाः पुष्पिता लोलभृङ्गाः
स्तोकोत्कम्पिस्तबकनमितास्तत्र वल्लीमतल्लीः ।
दूरे दृष्ट्वा द्रुतमुपसरन् भृङ्ग! वेत्तासि ताभ्यो
जातैर्गीतैः स्फुटजनपदैर्लासिका इत्युपान्ते ॥ ५५ ॥
गत्वा तस्मिन् विरतिमुपयात्युत्सवद्वारमार्ग-
प्रान्तं शान्तस्त्रिपुरजयिनो रूपमापादचूडम् ।
दृग्भ्यामापास्यसि गिरिसुताकान्तिपूराभिनन्द्यं
कालिन्द्यम्भोमिलितमिव तं नाकसिन्धुप्रवाहम् ॥ ५६ ॥
अश्मारोपे मृदुलमृदुलस्याङ्घ्रिपद्मस्य गौर्याः
सद्यो रक्तस्रुतिरिति नखांशुच्छटां निष्पतन्तीम् ।
आमृज्यालीजनविहसिते तस्थुषो नम्रवक्त्रं
तद् वैलक्ष्यं तव सुखयतां मन्मनो मन्मथारे! ॥ ५७ ॥
आशा वस्त्रे तव बहुतरा पूर्णकामः किल त्वं
पीतं कण्ठे लगति गरलं नीलकण्ठोऽसि लोके ।
श्रीकण्ठं त्वां कथयति जनः कण्ठलग्ना च गौरी
तस्माद् विस्मापकमयि! कथं प्रस्तुमस्त्वां नमस्ते ॥ ५८ ॥
इत्यानम्य त्रिपुरजयिनं बाह्यमल्लीनिकुञ्जे
नीत्वा रात्रिं प्रियजनपरीरम्भजङ्घालयामाम् ।
त्रुट्यत्ताराभरणमरु(तो ? णो) (या)वदागत्य रक्तां
प्राचीमालिङ्गति दयितया हन्त गन्तुं यतेथाः ॥ ५९ ॥

पूर्णत्रय्यां कमपि कलया पुण्यपूरं स्फुरन्तं
नुत्वा दत्ताञ्जलिरभिमतं भावयित्वा च याहि ।
क्षेत्रे यत्र स्फुरति महिते सूक्तिगङ्गातरङ्ग-
स्तोमैरान्दोलितहरजटाबालचन्द्रः कवीन्द्रः ॥ ६० ॥

पौरस्त्यायां ककुभि परिखीभूतचूर्णीतरङ्गाद्
दूरे दृश्या नभसि नगरी राजराजक्षितीन्दोः ।
यो भीमोऽपि प्रथ(म ? न)समयेष्वर्जुनत्वं यशोभि-
र्नीतः कृष्णामदधत करे खड्गवल्लीं सुभद्राम् ॥ ६१ ॥

माटक्ष्माभृद्वरकुलपुरीं पश्चिमाम्भोधितीरे
दृष्ट्वा निष्ठापितकनकसालोपरुद्धान्तरीक्षाम् ।
यत् कैलासे यदपि कलशाम्भोनिधौ यच्च ना(दे ? के)
दृष्टं चित्रं तदिह सहसा विस्मरिष्य(त्य ? स्य)वश्यम् ॥ ६२ ॥

तीरारामैः फलभरनमन्नालिकेराभिरामै-
स्तीर्त्वा देशान् कतिचन पुरग्रामदुर्गानुकीर्णान् ।
प्रत्यासन्नं भ्रमर ! पुरतः पञ्चरङ्गाधिनाथं
नत्वा दूरे परिहर मृधे तत्र भीमान् + + मान् ॥ ६३ ॥

युद्धं तस्मिन् दिनमनुवहद् वर्तते शैलसिन्धु-
क्ष्माभृन्माटक्षितिरमणयोर्विक्रमोच्चण्डदोष्णोः ।
यस्मादस्त्रोत्करशकलिता बिभ्रती योधकोटी-
र्द्यौरुद्भिन्ना वरणपटहैरन्वहं रोदितीव ॥ ६४ ॥

अग्रे वल्गत्प्रमथनिकुरुम्बा कुरुम्बाधिनाथा
तत्रादूरे विहरति वने ताण्डवैः सान्धिवेलैः ।

मत्ता रक्ताम्भसि करतलं ताडयन्त्यो हसन्त्यो
मग्ना नग्नाः समरधरणौ तत्र दृश्याः पिशाच्यः ॥ ६५ ॥

तां तामृद्धिं जनपदगतां निर्विशन् मार्गदेश-
श्रान्तां कान्तामतिमृदुलया वीजयन् पक्षपाल्या ।
माध्वीं कुञ्जेष्वतिमृदु (वियस ? निपीयानया) गाहितासे
युद्धोद्घुष्टां सपदि गुणकां माटधात्रीन्द्रगुप्ताम् ॥ ६६ ॥

तस्यां स्फोटस्फुटितगुलिकावर्षिदिङ्मण्डलायां
त्वय्युत्कूजत्त्वरितगमने निष्पतत्यम्बरेण ।
त्वामप्येते झटिति गुलिकां त्रापुषीमापतन्तीं
मत्वा लीनाश्चकितमवनौ हास्यतां दर्शयेयुः ॥ ६७ ॥

एकं नत्वा हिमगिरिसुतानेत्रलौहित्यसन्ध्या-
कोकं धाम स्तुतिभिरुपतिष्ठस्व तिष्ठन्नुपान्ते ।
तावन्नन्तुं सविधमयतः केरलेन्द्रस्य राज्ञो
रूपच्छायां पिबसि यदि ते चक्षुषी पूर्णपुण्ये ॥ ६८ ॥

अस्यां दृश्यं न खलु निखिलं नेति साफल्यमक्ष्णो-
र्न स्यान्नेति प्रियसहचरी नोत्सुका नेति चेष्टा (?) ।
कालक्षेपं कमपि न सहे स्मर्यमाणं दुनोति
प्रातश्चन्द्रद्युति (जन)मिमं वक्त्रमस्मत्प्रियायाः ॥ ६९ ॥

पात्रं लक्ष्म्या मधुकर ! ततः सङ्गमग्रामनाम
क्षेत्रं गच्छ प्रचुरदुरितध्वंसि कंसान्तकस्य ।
स्वामिप्रेम्णा कलशजलधेर्वीचिमालेव लग्ना
यस्य प्रस्फोरयति विभवं सा कुलीविन्युपान्ते ॥ ७० ॥

व्यामोद्भिन्नैस्तनुकचभरैर्नर्तयन्तं मयूरान्
भ्रान्त्या वक्षस्यपि दयितया भाययन्तं भुजङ्गान् ।
कुन्दस्वच्छैर्मृदुलहसितैस्तर्पयन्तं चकोरान्
देवं दृष्ट्वा स्तुहि भुवनकल्याणकन्दं मुकुन्दम् ॥ ७१ ॥

वेदान्तानां क्षणमनु मरीमृज्यमानं शिरोभिः
पादाम्भोजं शिरसि मम च त्वं कृपाब्धे ! निधेहि ।
यत्संवाहे पुळकपटलीनुन्नहस्तेम्बदेवी
पद्मा रुष्टा पुळकिनि मुहुः स्वे कुसन्निधाति(?) ॥ ७२ ॥

इत्थं गायन्नथ वलयगेहाधिनाथं भजेथा
भक्त्या (ग ? न)त्वा कनकनिकषस्निग्धवर्णामपर्णाम् ।
(स्थि ? स्तु)त्वा चैनामु(ति ? दि)तक(रा ? रुणा)पूरपीयूषवृष्ट्या
दृष्ट्या तस्याः स्फुटमनुमतो याहि पुण्यं वृषाद्रिम् ॥७३॥

लङ्काभर्तुर्भुजबलभरोन्मूलितं सान्ध्यनृत्ते
नित्यं शैलं निजमुदकयानोपमानं विभाव्य ।
निर्विण्णोऽस्मादथ विचलितः सप्रियापुत्रमित्रो
यस्मिन् वासं कलयति सुखेनैव सोमार्धधारी ॥ ७४ ॥

गौरीकान्त ! त्रिनयनमनोवल्लभे ! देव ! देवि !
प्रेमोद्रेको जयति जगतामीशयोरीदृशोऽयम् ।
एवं यो वा खलु कबळयन्नर्धगात्रं वितेने
विश्लेषार्तिप्रदरमविदन्तौ मिलन्तौ भवन्तौ ॥ ७५ ॥

इत्थं नुत्वा भुवनपितरौ तौ समामन्त्र्य तस्मा-
त्स्थानात्प्रियसख ! समीरालयं शीलयेथाः ।

यस्मिन् देवः स्वयमपि महापावनं पावनाना-
मातङ्कानामुपशमयिता भासते वासुदेवः ॥ ७६ ॥

लक्ष्मीमन्दस्मितमुररिपुश्रीकटाक्षाबलाख्ये
मुख्ये गङ्गासवितृसुतयोः सङ्गमे मग्नमूर्तिः ।
शान्तश्रान्तिर्दिनपरिणतौ देवमेव त्रिलोकी-
नाथं गाधेतरमहिमपाथोधिमारा(ग? ध)येथाः ॥ ७७ ॥

वक्रेणेन्दोरधरमहसा कौस्तुभस्यामृतस्य
स्निग्धैर्हासैरपि च विभवं मुष्णतीमम्बुराशिः ।
दृष्ट्वा कन्यां किल निजकुलद्वेषिणीं चौर्यशीलां
तुभ्यं कंसान्तक! दधिपयश्चोर! दत्त्वा कृतार्थः ॥ ७८ ॥

एवं देवं नुतिभिरभिवन्द्याच्युतं दिश्युदीच्यां
गत्वा दृष्ट्वा कलय निलयं नेत्रनारायणस्य ।
साधुग्रामप्रथितविभवां शुद्धवर्णानुषक्तां
धत्ते वृत्तिं श्रुतिपरिचितां गीतविद्यामिवासौ ॥ ७९ ॥

प्राग् वन्दस्व प्रियसख! लतां मुक्तिदेशालवाला-
मुद्गच्छन्तीं पुररिपुकटाक्षालिमालैकभोग्य.म् ।
अग्रे (चा)स्या मुहुरवनमन् भक्तलोकः फलानि
प्रत्यग्राणि स्फुटमपचिनोत्युच्चकैरुज्ज्वलानि ॥ ८० ॥

भङ्ग्या व्यङ्ग्याध्वनि परिमितान् बाल्यनिष्पन्दशब्द-
ब्रह्मोल्लासानुपचितकथानृत्तगीतादिबोधान् ।
नानासूक्तिप्रकरमुखरान् भारतीकल्पवल्ली-
बालोपघ्नानिव सुमनसस्तत्र सम्भावयेथाः ॥ ८१ ॥

मुक्तिस्थानं विमलमनसां तत् सखे! कामुकानां
बन्धस्थानं विविधचरितासक्तनानाजनौघम् ।
यस्मिन् कालभ्रम उदयते सुभ्रुवां केशहस्तैः
सल्लापैश्च स्मितरुचिभरैर्मञ्जुमञ्जीरघोषैः ॥ ८२ ॥

पुष्प्यच्चूतप्रकरकलिकासौरभीवासिताशान्
देशानस्मादथ विचलितस्तानये! मानयेथाः ।
अग्रे भाविन्यथ तव निळा लम्बिता सिन्धुवीची-
नीलक्षौमाम्बरपरिसरे हारवल्लीव भूमेः ॥ ८३ ॥

तत्र स्त्रीणां दिवसविरतिस्नानधौताधराणा-
मुत्तीर्णानां जघनपुळिनासक्तसूक्ष्माम्बराणाम् ।
भानुच्छायाप्रणयिनि कुचे बिम्बितात्मा मुहूर्तं
धत्तासि त्वं कनककलशीनीलरत्नोपमानम् ॥ ८४ ॥

कान्तैः साकं पिकमृदुगिरस्तत्र सङ्क्रीडमानाः
पश्यन्त्यस्त्वां पवनचलिते बिम्बितं वीचिजाले ।
छिन्नस्रस्तं मरतकमणीदाम वक्षोरुहाद्वि-
त्युद्भ्राम्यन्त्यः सलिलकुहरे हस्तमावर्तयेयुः ॥ ८५ ॥

क्षेत्रद्वन्द्वं पुरमुरभिदोर्दक्षिणे भाति कूले
नावाक्षेत्रं सुमहितमुदक्तीरदेशे निळायाः ।
मुक्त्वाम्भोधिं विहरति दयाम्भोनिधिर्यत्र देवो
विष्णुः कोष्णे कुचकलशयोरन्तराले रमायाः ॥ ८६ ॥

तत् पर्याप्तं भवति भवतस्तादृशस्यै(व) देव!
प्रेम्णो यत् त्वं वहसि भगवन्! वक्षसैव प्रियां ते ।

